॥ अथ द्वितीया ॥

त्वाम॑ग्ने॒ अति॑थिं पू॒र्व्यं विशः॑ शो॒चिष्के॑शं गृ॒हप॑तिं॒ नि षे॑दिरे।
बृ॒हत्के॑तुं पुरु॒रूपं॑ धन॒स्पृतं॑ सु॒शर्मा॑णं॒ स्वव॑सं जर॒द्विष॑म् ॥ २

त्वाम्। अ॒ग्ने॒। अति॑थिम्। पू॒र्व्यम्। विशः॑। शो॒चिःऽके॑शम्।
गृ॒हऽप॑तिम्। नि। से॒दि॒रे।
बृ॒हत्ऽके॑तुम्। पु॒रु॒ऽरूप॑म्। ध॒न॒ऽस्पृत॑म्। सु॒ऽशर्मा॑णम्। सु॒ऽअव॑सम्।
ज॒र॒त्ऽविष॑म् ॥ २

हे अग्ने त्वां विशो यजमाना गृहपतिं गृहस्वामिनं निषेदिरे। गार्हपत्यरूपेण स्थापितवन्त इत्यर्थः। कीदृशं त्वां। अतिथिमतिथिवत्पूज्यं पूर्व्यं पुरातनं शोचिष्केशं दीप्तज्वालं बृहत्केतुं प्रभूतप्रज्ञानं पुरुरूपमाहवनीयादिरूपेण बहुरूपं धनस्पृतं धनानां स्पर्तारं सुशर्माणं शोभनसुखं स्ववसं सुरक्षणं जरद्विषं जरता हवानां व्यापकं जीर्णोदकं वा ॥

अग्नीनां परस्परं संसर्गे विविचयेऽग्नये काचिदिष्टिः। तत्र त्वामग्ने मानुषीरिति याज्या। सूत्रितं च। त्वामग्ने मानुषीरीळते विशोऽग्न आयाहि वीतये। ऐ० ब्रा० ७. ६.। इति ॥

॥ सैषा तृतीया ॥

त्वाम॑ग्ने॒ मानु॑षीरीळते॒ विशो॑ होत्रा॒विदं॒ विवि॑चिं रत्न॒धात॑मम्।
गुहा॒ सन्तं॑ सुभग वि॒श्वद॑र्शतं तुविष्व॒णसं॑ सु॒यजं॑ घृत॒श्रिय॑म् ॥ ३

त्वाम्। अ॒ग्ने॒। मानु॑षीः। ई॒ळ॒ते॒। विशः॑। हो॒त्रा॒ऽविद॑म्।
विऽवि॑चिम्। र॒त्न॒ऽधात॑मम्।
गुहा॑। सन्त॑म्। सु॒ऽभ॒ग॒। वि॒श्वऽद॑र्शतम्। तु॒वि॒ऽस्व॒नस॑म्। सु॒ऽयज॑म्।
घृ॒त॒ऽश्रिय॑म् ॥ ३

हे अग्ने सुभग शोभनधन त्वां मानुषीर्विशो मानुषसंबंधिन्यः सर्वाः प्रजा ईडते। स्तुवंति। कीदृशं त्वां। होत्राविदं होत्राणां सप्तहोत्रकाणां वा वेत्तारं विचर्षिं विवेचकं सदसतोः रत्नधातमं रमणीयानां दातृतमं गुहा गुहायामरण्यां हृदयेषु वा संतं सर्वदा वर्तमानं विश्वदर्शतं सर्वैर्द्रष्टव्यं तुविष्वणसं प्रभूतध्वनिं सुयजं सुष्टु यष्टारं घृतश्रियं घृतं श्रयंतं॥

॥ अथ चतुर्थी ॥

त्वामंग्ने धर्णसिं विश्वधा वयं गीर्भिर्गृणंतो नमसोपं सेदिम ।

स नो जुषस्व समिधानो अंगिरो देवो मर्तस्य यशसा

सुदीतिभिः ॥ ४

त्वां । अग्ने । धर्णसिं । विश्वधा । वयं । गीःऽभिः । गृणंतः ।

नमसा । उप । सेदिम ।

सः । नः । जुषस्व । संऽइधानः । अंगिरः । देवः । मर्तस्य ।

यशसा । सुदीतिऽभिः ॥ ४

हे अग्ने धर्णसिं सर्वस्य धारकं त्वां वयमात्रेया वा विश्वधा बहुप्रकारेण गीर्भिर्गृणंतः स्तुवंतो नमसा नमस्कारेणोपसेदिम। उपसन्ना भवेम। स त्वं नोऽस्मान् जुषस्व। सेवस्व धनादिभिः। समिधानः सम्यग्दीप्तो दीप्यमानोऽस्माभिर्हे अंगिरः सुदीतिभि-सर्वत्र गंतरंगिरसः पुत्र वा देवो दीप्यमानस्त्वं मर्तस्य यजमानस्य यशसा सुदीतिभि-र्ज्वालाभिः सह जुषस्व॥

॥ अथ पंचमी ॥

त्वमंग्ने पुरुरूपो विशेविशे वयो दधासि प्रत्नथा पुरुष्टुत ।

पुरूण्यन्ना सहसा वि राजसि त्विषिः सा ते तित्विषाणस्य

नाधृषे ॥ ५

त्वं । अग्ने । पुरुऽरूपः । विशेऽविशे । वयः । दधासि ।
प्रत्नऽथा । पुरुऽस्तुत ।

पुरूणि । अन्ना । सहसा । वि । राजसि । त्विषिः । सा ।
ते । तित्विषाणस्य । न । आऽधृषे ॥ ५

हे अग्ने त्वं पुरुरूपः सन् विशेविशे सर्वस्मै यजमानाय प्रत्नथा पुराण इव वयोऽन्नं दधासि । धारयसि । हे पुरुष्टुत बहुभिः स्तुत पुरूणि बहून्यन्नानि चरुपुरोडाशादीनि सहसा बलेन विराजसि । ईश्वरो भवसि स्वीकर्तुं । तित्विषाणस्य दीप्तस्य ते तव सा प्रसिद्धा त्विषिर्दीप्तिर्नाधृषे । अन्यैरधृष्या भवति ।

॥ अथ षष्ठी ॥

त्वामग्ने समिधानं यविष्ठ्य देवा दूतं चक्रिरे हव्यवाहनं ।
उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्मति ॥ ६

त्वां । अग्ने । सम्ऽइधानं । यविष्ठ्य । देवाः । दूतं । चक्रिरे ।
हव्यऽवाहनं ।

उरुऽज्रयसं । घृतऽयोनिं । आऽहुतं । त्वेषं । चक्षुः । दधिरे ।
चोदयत्ऽमति ॥ ६

हे यविष्ठ्य युवतमाग्ने समिधानं सम्यगिध्यमानं त्वां हव्यवाहनं हविषां वोढारं दूतं चक्रिरे । कृतवन्तो देवाः । तथाचाग्नीनां मध्ये हव्यवाहनः खलु पूर्वं देवैर्हविर्वहनाय दूतः कृतः । हव्यवाहनो देवानामिति हि श्रुतिः । किंच उरुज्रयसं प्रभूतवेगं घृतयोनिं । घृतं योनिः कारणं यस्य तं । आहुतं त्वां चोदयन्मति । चोदयंती मतिर्यस्य तच्चोदयन्मति । त्वेषं दीप्तं चक्षुरुत्तमलक्षणं सर्वप्रकाशकं चक्षुःस्थानीयं कृत्वा दधिरे देवा मनुष्याश्च । मत्या हि चक्षुश्चोद्यते ॥

